गो॰त्सद्वादशी नाम व्रतमुक्तं ततः परम् ॥ १६ ॥ नीराजनद्वादशी च भीष्मपंचकमेव च ॥ मल्लिकाख्या द्वादशी च भीमा द्वादशिकोत्तमा ॥ ॥ १७ ॥ श्रवणद्वादशी नाम संप्राप्तिद्वादशीव्रतम् ॥ गोविन्दद्वादशी नाम व्रतमुक्तं ततः परम् ॥१८॥ अखंडद्वादशी नाम तिलद्वादश्यतः परम् ॥ सुकृतद्वादशी नाम धरणीव्रतमेव च ॥ १९ ॥ विशोकद्वादशी नाम विभूतिद्वादशीव्रतम् ॥ पुष्यर्क्षद्वादशी चैव द्वादशी श्रवणर्क्षगा ॥ २० ॥ अनंगद्वादशी चैव अङ्कपादव्रतं तथा ॥ निम्बार्ककर िराथ यमा दर्शत्रयोदशी ॥ अनंगद्वादशी चापि पालिरम्भाव्रते तथा ॥ २१ ॥ चतुर्दशीव्रतं प्रोक्तं ततोऽनन्तचतुर्दशी ॥ श्रावणीव्रतनक्तं च चतु॰श्यष्टमीदिने ॥ २२ ॥ व्रतं शिवचतुर्दश्यां फलत्यागचतुर्दशी ॥ वैशाखी कार्तिकी माघीव्रत मेतदनंतरन् ॥ २३ ॥ कार्तिक्यां कृत्तिकायोगे कृत्तिकाव्रतमीरितम् ॥ फाल्गुने पूर्णिमायां तु व्रतं पूर्णमनोरथम् ॥ २४ ॥ अशोकपूर्णिमा नाम अनंतव्रतमेव च ॥ व्रतं हि सांभरायिण्यं नक्षत्रपुरुषव्रतम् ॥ २५ ॥ शिवनक्षत्रपुरुषं संपूर्णं येन मुच्यते ॥ कामदानव्रतं नाम वृन्ताकविधिरेव च ॥ २६ ॥ आदित्यस्य दिने नक्तं संक्रात्युद्यापने फलम् ॥ भद्राव्रतमगस्त्यार्घो नवचन्द्रार्कमेव च ॥ २७ ॥ अर्घः शुक्रबृहस्पत्योः पंचाशीति व्रतानि च ॥ माघस्नानं नित्यस्नानं रुद्रस्नानविधिस्तथा ॥ २८ ॥ चंद्रार्कग्रहणे स्नानं विधिश्चान्नाशने तथा ॥ वापीकूपतडागानामुत्सर्गो वृक्षयाजनम् ॥ २९ ॥ देवपूजादीपदानवृषोत्सर्गविधिस्तथा ॥ फाल्गुन्युत्सवकं नाम तथान्यः सदनोत्सवः ॥ ३० ॥ भूतमाता च श्रावण्यां रक्षाबंधविधिस्तथा ॥ विधिस्तथा नवम्यास्तु तथा चन्द्रमहोत्सवः ॥ ३१ ॥ दीपालिकायां तु होमो लक्षहोमविधिस्तथा ॥ कोटिहोमो महाशीतिर्गणनाथस्य शांतिका ॥ ३२ ॥ तथा नक्षत्रहोमोथ गोदानविधिरेव च ॥ गुडधेनुघृतधेनुतिलधेनुव्रतं तथा ॥ ३३ ॥ जलधेनुविधिः प्रोक्तो लवणस्य तथा परा ॥ धेनुः कार्या समं ज्ञात्वा नवनीतस्य चापरा ॥ सुवर्णधेनुश्च तथा देवकार्यं चिकीर्षुभिः ॥ ३४ ॥ इति श्रीभविष्ये महापुराण उत्तरपर्वणि श्रीकृष्णयुधिष्ठिरसंवादे संक्षिप्तानुक्रमणिकाकथनं नामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥ ॥ छ ॥ ॥ ॥

इति चतुर्थमुत्तरपर्व ॥ ४ ॥

## समाप्तोऽयं भविष्यपुराणग्रन्थः ।



१ आवनीव्रतनक्तं च–इ० पा० । २ भद्रावतम्–इ० पा० ।